येनपासवदपासमन्यत्, प्रीणयत्यनुदिनं धनैस्त्वयि ।
तस्करेऽपि मृगमर्षिता गत, शेरते पुरि सुखेन रक्षका ॥ १०

तावकीनयशसैव चाधवलौ, पूर्णिमा स्फटिसमेन तन्वता ।
उज्ज्वले जगति पाशुलाकुलैराकुलैरहह ! साधुता दधे ॥ ११

त्वमहोमिरहिमांशुकोटिवद्, निष्प्रकम्पनयनेन राहुणा ।
हिम्मभानुरनुपद्रुतोऽभवत्, सीम्नि वर्षति विशेषहर्षित ॥ १२

इत्थमद्भुतविभूतिभूरभूद्, देव ! देशजनता नयात् तव ।
जैनधर्मपरिवर्धनोचित, तन्महाश्रमणशासनं स्मर ॥ १३

वाक्यमस्य सुरसिन्धुबन्धुरा, भारतीमिति निशम्य सम्मदी ।
आह किञ्चन निचिन्त्य चातुरीरोचितं सचिवचक्रशेखर ॥ १४

आत्मगोत्रगुरव पुराऽभवन्, विश्रुता भुवि महेन्द्रसूरयः ।
यैः सिताम्बरवरैः सिताम्बर, निर्ममे जगदमेयकीर्तिभिः ॥ १५

यैरजीयत जगत्त्रयीजयी, मन्मथोऽयमिदमद्भुतं न न ।
यद्वधूऽपि यशसा यतो जित, कामजित्सुकृतकुम्भि सा शशी ॥ १६

शान्तिसूरिरथ तत्पदश्रियो ऽलङ्कृतिः क्षितिपु शासनोऽभवत् ।
उद्गृणन्ति महतोऽपि यद्गुणान्, निस्तृतामृतरसा रसाधिकम् ॥ १७

य सुदर्शनधर हरिभ्रमाभासनाद् गुरुरिति स्वयं रतिः ।
कान्तसोमकलमौलिशङ्कया, य जयीति मदनोऽपि नैक्षत ॥ १८

तत्पदेऽनिविदितप्रथाव्यथा ऽऽनन्दसूरयमरसूरिराजको ।
वासमन्दिरविलासमन्दिरं, श्रेयसा मुनिविभू बभूवतु ॥ १९

शैशवेऽपि मदमत्तवादविद्वारवारणनिवारणक्षमौ ।
यौ जगाद जयसिंहभूपति-व्याघ्र-सिंहशिशुकाविति स्वयम् ॥ २०

तत्पतोर्गति निर्भरं ययोर्येदचममगमन् विवादिन ।
स यदि स्फुटयशानुवादतः, स्वस्य मन्दगुणतामदर्शयत् ॥ २१

तत्पदाम्बुरुहषट्पदा पद, भेजिरेऽथ हरिभद्रसूरयः ।
यैर्विलङ्घ्य कुसुमानि कान्तिभिस्त्यैव कुसुमायुधो जित ॥ २२

संयमप्रभृतिभिस्तथा गुणैर्यैर्मत पदमपूरि सूरिभि ।
न प्रवेष्टुमिह मन्मथो यथा ऽनङ्गतामपि गत क्षमोऽभवत् ॥ २३

सन्ति सम्प्रति तदीयशासने, सूरयो विजयसेनसूरयः ।
उज्झितो जगति यैर्महाव्रतस्मन्मथोऽपि मनमेदनोऽभवत् ॥ २४

सर्वतोमुखतपोहुताग्नैर्येर्हुत स्मर इति क विस्मय ? ।
निर्जित पुरजिता पुरा यतो, नेनमानतुम्निताग्निनाऽपि स ॥ २५

गम्यते तपनरम्यतेजस स्तस्य वदननिधिसया गुरो ।
देशना समधिगम्य तन्मुखाद्, धर्मकर्मणि निधीयते मन ॥ २६

इत्युदीर्य मनिभासुर पुरस्कृत्य कृत्यविदसौ सहोदरम् ।
कम्पयन् कलियुग मनोरथै रासमाद वसति मुनीशितु ॥ २७

द्वारमध्यमविशन्निपेधिका मुद्गिरन् गुरुमवेत्य तपुर ।
बाष्परुद्धनयन पदे पदे, सम्मदेन घनगद्गदोऽस्खलत् ॥ २८

दु षमाविषमतापतापिता, वीजयन्निव परामसौ चिरात् ।
अञ्चलेन करचञ्चलेन स चक्रिवान् गुरुनमस्कृति कृती ॥ २९

दन्तदीप्तिपटलच्छलोच्छल-न्मूर्त्तिम सुकृतवर्मितामिव ।
विभ्रदद्दुरितराशिरातिप, निर्ममे तदनु निर्ममेश्वर ॥ ३०

सोऽभ्युदञ्च्य कथमप्यथ क्षिते र्भक्तिभारनमित शिरश्चिरात् ।
अग्रतो मुनिविभोर्व्यभूपयद्, धुकमासनमधुकवासन ॥ ३१

आकलय्य गुरुसन्निका मुख-द्वारि निस्फुरितदन्तदीप्तिवत् ।
देशना सचिवभर्तुरमत कर्तुमारभत सूरिशेखर ॥ ३२

वीतरागमतधर्मकारिणि, साधुवृत्तगुरुभक्तिभासुरा ।
श्रावका कतिचिदात्मभावना-दान शील-तपसो भवन्ति चेत् ॥ ३३

दान शील-तपसा विजित्वरी, भावनैव भवनाशिनी भवेत् ।
सा पुनर्विजयते प्रभावना, सा तु सम्पदि सुखेन साध्यते ॥ ३४

अस्थिरा कलभिका इव श्रिय, पातयन्ति नरकावटे नरम् ।
कश्चिदेव निपुण नियोजक, स्तम्भयति विकृत्य भवाटवीम् ॥ ३५

श्रावकत्वममलं कुल कला चकनारमपि कश्चिदुद्वहन् ।
सम्पदा कलनयेव लोलया, पीतमद्य इव मोह्यते जन ॥ ३६

शीलिता शुचितरेषु रोपिता, स्थानकेषु समये यथाविधि ।
पुष्पिताऽद्भुततरैर्यशोभरै-राशु पुण्यफलदेनते भवेत् ॥ ३७

न स्थिरा कचन यान्ति सम्पद, सम्मिलन्ति रसवत् कथञ्चन ।
सम्पद प्रकटितप्रभावना, कस्यचिद् यदि भवति सिद्धये ॥ ३८

भावयन्ति परिकॢप्तभावना-दान शील-तपस स्वमव तन् ।
विश्वशासननिकाशदीपिका, व्यातनोति विरल प्रभावनाम् ॥ ३९

जल्पितानि बहुधा प्रभावना-कारणानि मुनिभिः पुरातनैः ।
उत्सवो भवति तीर्थयात्रया, तेषु शेखरमणिस्तु निस्तुपः ॥ ४०

सिद्धलोक इव सद्गता गनः, पूज्यते ननु जनो जिनैरपि ।
धन्य एव स तु तीर्थयात्रया, कोऽपि सद्व्ययिता निमर्ति यः ॥ ४१

दिक्पुरन्ध्रिमुखमुकुराय कस्यचित्, रौप्यदर्पणनिभो यशश्चयः ।
सद्व्ययप्रवितरेणुमार्जना दिन्दुधामधवलो विलोक्यते ॥ ४२

सद्व्ययैर्धरविरोपितस्तथा, वर्धते सपदि पुण्यपादपः ।
दर्शयत्यमृतसन्निभं यथा, विष्टपत्रितयमौलिगं फलम् ॥ ४३

नागेन्द्रगच्छमुकुटस्य मुनेरमून-माकर्ण्य वर्ण्यमिति मन्त्रिपतिर्विचारम् ।
नत्वा स्वधामनि जगाम जिनेन्द्रयात्रा निर्माणनिर्मलमनोऽतिमनोरथश्री ॥ ४४

किञ्च—

वितन्वाते विष्वाङ्गणसदसि यावत् तव यश
प्रतापाभ्यामभ्युल्लसितहसितचित्रवादं विधुन्वौ ।
भज स्थैर्यं सोमान्वयतिलक ! तावत् क सुकृते,
कृतैरेभ्यः सम्यक्त्वमिह गुण दोषैः कनिकप[1] ॥ १

ईदृक् कश्चिद् विपश्चिज्जनमनसि चमत्कारकारी पुराऽपि,
क्वापि प्रापि प्रबुद्धे वसुमति सुमतिर्वस्तुपालस्य तुल्यः ।
येन क्षीरार्णवार्णश्चयसिचयजुषः सिद्धसिन्धूत्तरीय
श्रीविस्तारोत्तराया व्यरचि शुभरुचि कीर्तिभिः कञ्चुकस्ते ॥ २

सचक्रनन्दकपुरोगदयाद्भुतश्री-स्त्वं वस्तुपाल ! पुरुषोत्तम ! जिष्णुरेव ।
तद् दूयते तु हृदि मेऽन्वहमेव शङ्खो, यद् सिन्धुराजतनुभूर्न करे गृहीतः ॥ ३

कविर्न को निस्तुषवस्तुपाल-यशःसुधानिद्ररसं रसज्ञः ।
प्रबन्धमास्वादयतेऽरिसिंह-मुखारविन्दैकमरन्दमेनम्[2] ॥ ४

प्रतिसर्गं प्रबन्धेऽस्मिन्नरिसिंहविनिर्मिते । इमान्यकृत चत्वारि, काव्यान्यमरपण्डितः ॥ ५

**॥ इति सुकृतसंकीर्तननाम्नि महाकाव्ये धर्मोपदेशनो नाम चतुर्थः सर्गः ॥ ४ ॥**



---

[1] ख-ग-'भवनोऽभवो' ॥ [2] ख-'हसितविविवाद' ॥

स तीर्थयात्रासु मनोमनोरथं प्रकाशयन् सम्मदमेदुरोद्यमः ।
पुरे पुरे श्राद्धजनाय नायको, विवेकभाजां लिखितान्यलीलिखत् ॥ १

अवाहनानामपि वाहनावली-मशम्बलानामपि शम्बलं बली ।
अकिङ्कराणामपि किङ्करान् कृती, वितीर्य सङ्घे समवीवहद् बहून् ॥ २

अदोषधीर्मन्त्रिपतिस्तदौषधी-रमीमिलद् विश्वरुजां विजित्वरीः ।
यमूव ताभिर्दृष्टमोषधीपतिः, स कौमुदीकोमलकीर्त्तिकारणम् ॥ ३

पृथैव वैधाननवधवैभवान्, समं स मन्त्री जगृहे महेच्छया ।
प्रभूष्णुसद्धर्मरेणुराशिजं, तदाऽखिलव्याधिहरं तमोऽपि यत् ॥ ४

न यद्यपि प्रौढनृपप्रभावतो, भविष्यति स्पृष्टमनोभिदा क्वचित् ।
परोपकाराय तथाऽप्यये कृती, युगादिसर्वज्ञकृतादरोऽभवत् ॥ ५

अथासितश्रीमतनिर्जिताम्बर-द्विपो भयाम्भोनिधिकुम्भसंभवान् ।
मठेषु गत्वा स्वयमद्भुतादरः, समं शमीन्द्रान् समवाहयत् कृती ॥ ६

सतां पतिः सङ्घपतित्वरोपणा-मिषेकमासाद्य गुरोः कराम्बुजात् ।
शुभे मुहूर्त्तेऽद्भुतवाह्यवाहिनी-वृतोऽचलच्चन्दनचर्चिताकृतिः ॥ ७

ततश्चतुर्विंशतितीर्थकृत्कला-कलादितीर्थङ्करदेवतालयः ।
चचाल नृत्यादिविनोदतत्परः, प्रजामुदश्रुस्नपितेन वर्त्मना ॥ ८

पिबन् पयः स्व सरितो वियद्वने, शशाङ्ककान्तीस्तृणुते तृणोपमाः ।
विशृङ्खलो यस्य यशःकिशोरकः, समं त्रिगोत्रैर्गुरुस्ततोऽचलत् ॥ ९

यथानुवर्त्तनरचन्द्रसूरयो, हसत्त्रसत्तोमविलोकनच्छलात् ।
दशीव सिञ्चन्त इवाद्भुतक्षमां, प्रयाति सङ्घे वसुधां सुधान्तया ॥ १०

अथाचलन् वायटगच्छवत्सलाः, कलास्पदं श्रीजिनदत्तसूरयः ।
निराकृतश्रीषु न येषु मन्मथः, चकार केलिं जननीविरोधतः ॥ ११

भवाभिभूतेन मनोभुवा भया-दनीक्षिते कक्षभवाभिभूतिभिः ।
अनाभि सण्डेरकगच्छसूरिभि-, प्रशान्तसूरैरथ शान्तिसूरिभिः ॥ १२

शरीरभासैव पराभवं स्मरः, स्मरन्ननस्यत् किल यस्य दूरतः ।
स वर्द्धमानाभिधसूरिशेखरस्ततोऽचलद् गल्लकलोकभास्करः ॥ १३

सहस्रशीर्षोरगकल्पकीर्त्तयः सहस्रधामप्रतिमानतेजसः ।
सहस्रनेत्रप्रमुखामरस्तुताः, सहस्रशोऽन्येऽपि च सूरयोऽचलन् ॥ १४

चतुर्दिगापूरणभूरिनिःस्वन-श्चतुःसमुद्रान्तमहीतलागतः ।
ततश्चतुर्यन्ततनिश्चलोऽचल-चतुर्विधः सङ्घजनो यथाविधि ॥ १५

अगण्यपुण्यैर्भवसिन्धुपारम्-रमद्दयं लोचनगोचरो गिरिः ।
इति स्मयस्मेरहृदो विदस्तदा, ससम्भ्रमाश्रुरहो ! महोत्सवम् ॥　　　३१

गतोऽग्रतोऽस्मिन् दुरितैम्नाविलो, विलोक्य नाभेयनिकेतकेतनम् ।
जनस्तदा हर्षरसोर्मिनिझ्वो, मदान्न किं किं रचयाञ्चकार सः ! ॥　　　३२

ननर्त कश्चित् पृथुसम्मदस्तदा, सलीलमोलायितपाणिपल्लवः ।
प्रतिप्रतीकं परितः कुतूहला-दलं यथाऽऽलोक्यत पुण्यसम्पदा ॥　　　३३

बहुःपतत्पादयुगस्तदाऽपरो, ननर्त दूरप्रसरत्करच्छदः ।
विधातुमुड्डीय नगाधिरोहणं, मनोरथी पत्ररथीभवन्निव ॥　　　३४

भवभ्रमिभ्रान्ततरः शिरोगरा-ऽधिरोपितं पापभरं त्यजन्निव ।
इलामिलन्मौलिरमन्दसम्मदो, ननाम विश्रामविधित्सया परः ॥　　　३५

विलोकयन् कोऽपि वृषध्वजध्वजं, मुहुर्मुहुर्मङ्क्षु नमन्नमन्दधीः ।
उदञ्चित-न्यञ्चितमौलिलीलया, रराज मुक्तिश्रियमाह्वयन्निव ॥　　　३६

अमुत्र शत्रुञ्जयशैलसन्निधौ, भयार्णवस्येव तटे तदा परः ।
निरीयितुं पातकजातकर्दमा-ल्लुलोठ सर्वाङ्गमुदारभीर्मुदा ॥　　　३७

समुद्रवज्रावरसादचेतन-श्चिराय नृत्यान्निविवेकवर्जितः ।
परः शिलापुत्रसमोऽपि वाम्यया-न्नमोचि रिष्टैरपि रिष्टशङ्कितैः ॥　　　३८

इहाथ पाथस्तृणराजिराजिते, जितेन्द्रियो मन्त्रिपतिर्महीतले ।
क्षमापतेोदार्यमत्रापगत् तदा, निवासमासन्नममुष्य भूभृतः ॥　　　३९

अथाजवत् खिन्नजनप्रमोदिनो, दिनोपतापे सचिवः स किङ्करान् ।
मरुत्प्रपान् ग्रैष्मदेप तत्क्षणे, शिखिस्फुरद्ग्रन्थविडम्बिताम्बुदान् ॥　　　४०

सुबंदसंयोजितरूपशोभिता, विनिर्मिता भातुरसेन सर्वतः ।
पदे पदे पर्वतपादसोदरा, वितेनिरे पीवरचीवरालयाः ॥　　　४१

मनांसि धर्मक्षितिपस्य वप्रवत्, पदे पदे मण्डलितानि रेजिरे ।
तृणं द्विषत्पापमिवोद्मूलयन्, यतो विनिस्सृत्य वृषा मदा इव ॥　　　४२

गिरौ गतिं पश्यत नः कुतूहलात्, कथं वृथा मुञ्चत भूतले समे ? ।
इतीव चाटूक्तिकृतत्वरणं मुखे, वृषा व्यधुर्वेगति सारथौ पुरः ॥　　　४३

नैयेन सकस्य रसातलं यथा, कथं समाकृष्यत साऽपि भिन्महे (?) ।
नवीनचुल्लीविवरापदेशतः, खनन्ति भूखण्डमिति स्म किङ्कराः ॥　　　४४

१ क–ख पुस्तके ४४ तम काव्य नास्ति ॥

प्रवृत्तवृत्ता प्रेंचणैर्मिषाभिभि, प्रणीतर्मीना कमलाश्यपद्पदे ।
तदा व्यधु स्वागतमागा जन, विदम्भमम्भ प्रसरेण सिंधव ॥ ४५
तदाऽनपाकाय विकादित सिवी, नल्नन् वमौ सङ्घजन निवासिनि ।
भरानमद्भूमिभिदाशुटत्खुरस्फोटपूरामगिरस्विताशिक्त् ॥ ४६
अथैव तीर्थङ्करदवताग्य प्रम्न्नमव्यादिनमृजनो जन ।
मुदा नमस्कृत्य गुरुकमद्वय, प्रचकमे दाक्षतकन्यकत्यिषु ॥ ४७
अदायि दानाय तदा धन तथा, मनोरथालेनमनेन मन्त्रिणा ।
यथा परे निश्चयशायिनो जना, वनीपकानामपि चाटु चक्रिरे ॥ ४८
स्वय स कस्मैचन मोदकादिकं, घृतादि कस्मैचन शुद्धवासन ।
फलादि कस्मैचन सायके ददद्, तदा विशश्राम न मन्त्रिशेखर ॥ ४९
अकिञ्चन कश्चन याचत यन्त्रित्, किम यहो ! शब्दमिति प्रदाय स ।
चकार भोज्यादिकमात्मना कृती तृतीयवासक्षणपूरितेक्षण ॥ ५०
अथ कृतनतुकृत्य कौतुकोत्तानचेता, जिनपदमनुसङ्घ संघसङ्घमागात् ।
इह महमहिमासुर्दुरुकामो निकाम, गमनगमनवित्त प्रयणद्धौ निषण्ण ॥ ५१

किञ्च—

पाव पायमहर्निश रिपुयश पीयूषपूर भवान्,
कष्पातु क्षितिकल्पवृक्ष ! भवनात्तुदर्शम्लितालिङ्गित ।
श्रीसोमान्वयसोमनौकिकमथैरेव प्रसूनैस्वि,
त्वत्कीर्तिप्रकरैरपि त्रिभुवन सौरभ्यमभ्यस्यतु ॥ १
मायमायम ! नाम्बरे यश, श्रावसन्त ! तव सन्ततस्थितम् ।
इत्यन यमहिमानमानसो मानसाश्रयमहो ! महायसान् ॥ २
सैमुल्लिनाभि खलु वस्तुपाल प्रतापदीपाञ्जनमञ्जराभि ।
इहोपकण्ठस्थितिभाजि शङ्के, माङ्गियमुमीलितमुखमप्यपि ॥ ३
श्रीवस्तुपालप्रथितप्रसादाद्-दासन् प्रमोदामृतवारयो या ।
एतत्प्रबन्धच्छलतोऽरिसिंह-स्ता एव मूर्ता स्तबकीचकार ॥ ४
प्रतिसर्गं प्रबन्धेऽस्मिन्नरिसिंहविनिर्मिते। इमा यत्न चत्वारि, काव्यान्यमरपण्डितः ॥ ५

**॥ इति सुकृतसङ्कीर्तननाम्नि महाकाव्ये सङ्घप्रस्थानो नाम पञ्चमः सर्गः ॥ ५ ॥**



१ ग प्रग्लो ॥ २ ग–समुत्स्वना ॥

अवतमससतीना मृत्युकालेऽपमृत्यु, कुवलयवलयाना जीवित पङ्कजिन्या ।
अलमकृत नभोऽङ्कं कोकलोकस्य सीता विरहितहरिशापानुग्रहोऽय ग्रहेश ॥ ३१

दयितमिति पुरस्ताद् वीक्ष्य भानु युवान, हरिहरिति हरिद्दारागमाग प्रकोपात् ।
स्फुटकमलमुखेभ्योऽमोचि नि श्वासधूमा वलिरलिनिकुरम्बच्छद्मना पद्मिनीभि ॥ ३२

अजनि गिरिनितम्बे निम्नमर्कस्य धातु स्फुरितमिव सराग सूर्यकान्ताग्नितसम् ।
करजलपरिधौत चुम्बित चाम्बरेण, क्षणघटितसुवर्णादर्शवद् दिग्वधूनाम् ॥ ३३

सममसममयूखैर्भानुमन्त लसन्त, गिरिशिरसि विलोक्याऽऽलोकनीयप्रभावम् ।
स इव सचिवभर्ता सह्लोकेन साक, विमलगिरिशिरोऽग्र गन्तुमभ्युत्सुकोऽभूत् ॥ ३४

सद्यो जिनक्रमनमस्कृतिलोलसद्य सङ्घदलेलवसुधातलसम्भ्रमेण ।
श्रीवस्तुपालगुणहृष्ट इवाचलोऽपि, शत्रुञ्जयः स्वयमकम्पयदेप मौलिम् ॥ ३५

किञ्च—

नित्य त्वद्वदनारविन्दसदन वाग्देवता सेवते,
　　त्व पद्माश्रयभासुरोऽसि जयति त्रैलोक्यसूत्र त्वयि ।
श्रीमत्प्राग्वाटगोत्रमण्डन ! गुणैरभिर्भवान् ब्रह्मण,
　　साधर्म्यं वहति प्रियवद ! मदाशार्भिस्तदायुर्भव ॥ १

अलभत बत ! यस्मिन् सान्द्रदारिद्र्यपूर्णे गृहपतिरवकाश न प्रदोषक्षणेऽपि ।
वितरति सति वित्त वस्तुपाले कवीना मिह गृहकुहरान्तर्नैप रत्नाकुलेऽपि ॥ २

श्रीमन्त्रीश्वरवस्तुपाल ! भुजयोर्युग्मेन युद्धार्णव,
　　तूर्णं निस्तरतोऽपि ते समभवन्न व्याकुलत्व क्वचित् ।
यद्दूरादवगण्य निर्मलगुण शङ्ख त्वया मौक्तिक
　　स्तोमानामिव धैर्यधुर्य ! यशसा चक्रे महान् सङ्ग्रह ॥ ३

श्रीवस्तुपालसचिवेन्द्रयश प्रसून-माल्येऽरिसिंहकविना गुणगुम्फितेऽस्मिन् ।
कण्ठे सता लुठति निर्मरदुर्जनाली-वक्त्रप्रभा कति न बिभ्रति म्लानभावम् ॥ ४

प्रतिसर्गं प्रबन्धेऽस्मिन्नरिसिंहविनिर्मिते । इमान्यकृत चत्वारि, काव्यान्यमरपण्डितः ॥ ५

॥ इति सुकृतसङ्कीर्त्तननाम्नि महाकाव्ये सूर्योदयवर्णनो
नाम षष्ठः सर्गः ॥ ६ ॥



शैलमौलिगमनाय मनोऽश्वै-र्भ्राजमानमसमानविहारैः ।
प्रापदस्खलितमप्यसमेषु, द्राग् मनोरथरयं पथि सङ्घः ॥ १

भूरिधातुमयजङ्गमशृङ्ग-श्रेणिवद्विविधचीरविचित्रः ।
मन्दमन्दमथ सङ्घजनोऽसौ, सञ्चचाल गिरिराजतटेषु[1] ॥ २

मञ्जुलैः कनककुण्डलकान्तैः, श्रीमुखैः सरसि सोमशताभैः ।
एकभानु-हिमभानुमनोज्ञो, मेरुमप्यजयदेष गिरीन्द्रः ॥ ३

अञ्चलैः शशिसुखीवसनानां, चञ्चलैः कटकसीमनि शैलः ।
सङ्घसङ्ग सुरतामृतसेका-दुद्गतप्रथमपक्ष इवाभात् ॥ ४

आन्तरेण नयनेन जिनेन्दो-राननेन्दुरुचिपानपराणाम् ।
अप्युदारगिरिशृङ्गविलङ्घे, न श्रमः समजनिष्ट जनानाम् ॥ ५

नाम नामसुधया जिनभर्तुः, प्राश्नया जनमुखेषु न तृष्णा ।
दूरवर्तिनि मुखामृतकुण्डे, लोचनानि तृषितानि जनानाम् ॥ ६

प्राप्रियोजितमनोहततीर्था-धीशपादकमलाङ्कितमौलिः ।
शैलसानुषु जनो न वहन्नो, तापमाप तपनांशुततिभ्यः ॥ ७

एमागतेन लघुकं यददर्शि, क्षोणिभृच्छिरसि तेन जनेन ।
उच्चकैर्विचरता ददृशे तत्, महदसह्ममदादिव पुष्टम् ॥ ८

देवभक्तिभरनिर्मितहस्ता-लम्बनश्यतिकरेण मनोऽगम् ।
आसदद् गिरिशिरस्यतिहर्षा-न्मङ्क्षु सम्मुखमिवागतवन्ति ॥ ९

अद्भुतप्रमदशालिषु शैलः, शेखरस्थितिषु तेषु जनेषु ।
भूतिभासितमुखेषु स रेजे, मेरुवज्जनरविच्छविपिङ्गः ॥ १०

कर्मवैरिविजयाय सतेजा, नाभिभूपदनखांशुविचित्रम् ।
आरुरोह सचिव- शुचिदन्तैः, दन्तिराजमिव तं गिरिराजम् ॥ ११

वीक्ष्य यक्षमिह सङ्घजनौघ, श्रीकपर्दिनमथाम्बिरिवेन्दुम् ।
क्षुभ्यति स्म चतुरः स चतुर्धा, विस्तृतस्तरलहर्षतरङ्गः ॥ १२

अन्तरायदलनाय जनौघं, तीर्थसेवनरतेऽभिपतन्तम् ।
दृष्टुकाम इव वर्मनि दूरा-न्नारुरोह गुरुशैलशिरो यः ॥ १३

भावनासलिलशालिनि शश्वत्, तीर्थनाथपदपद्ममनोज्ञे ।
मानसे तनुमतां विलसन् यो, हंसवत् सृजति कामपि कान्तिम् ॥ १४

यक्षमुख्य ! स भवान् भुवनैक-त्राणकारणमकारणबन्धुः ।
वत्सलेव जननी जनमेनं, नाथ ! पालयतु बालमिव स्वम् ॥ १५

---

१ ख-ग-°तटेषु ॥

श्रीकपर्दिनमिति स्तुतिपूर्वं, यक्षराजमभिपूज्य सहर्षम् ।
आशु सङ्घपतिरेष ससङ्घस्तीर्थनाथनमनार्थमचालीत् ॥ १६

उत्सुकैरथ जनैर्जिनचैत्यं, वीक्ष्य मङ्क्षु पथि गामिव वत्सैः ।
व्यक्तशक्तिरभसत्रुटितोच्चैः-कर्मबन्धतरलं प्रदधावे ॥ १७

सञ्चरन् भुवि न माति जनो य, स्फूर्तिसङ्कुचितमूर्तिलवोऽसौ ।
द्रष्टुमास्यनलिनं जिनभर्तु-श्चैत्यधाम्नि स ममौ सममेषः ॥ १८

दृश्यमानमसमानविमर्दं, हद्ध हद्धा ननु मिथस्तनुभाजाम् ।
भाग्यभङ्गभयभङ्गुरसत्त्वै-स्तत्तदारिभिरमोचि तदानीम् ॥ १९

पापपङ्कशमनाय जनानां, स्नानमन्तरकरोद् ध्रुवमात्मा ।
रोमवर्त्मसु जवेन विमर्दे, स्वेदपूरमिषतः प्रसृतं तत् ॥ २०

आबभौ घनघनाघनलक्ष्मी-रङ्गिनां प्रमदरोमविकारः ।
अन्तरस्थितजिनेन्दुरुचिश्री-निरसरद्दुरितवामसतुल्यः ॥ २१

लोचनैस्तनुभृतामिति खिन्नैः, प्राप्य जैनवदनामृतकुण्डम् ।
आशु स्फूतसवनैरिव रेजे, सम्मदेन विगलज्जललेशैः ॥ २२

तत्र तादृगपि जनस्य विमर्दे, शक्यते भ्रमयितुं न करोऽपि ।
वीक्ष्य विश्वविभुमेनमनृत्यन्, भाविनो यदि मुदा मनसैव ॥ २३

स्वीयतादृशविमर्दसुदूर-क्षिप्तसूरकिरणः किल लोकः ।
रत्नभूषणविभिन्नतमिस्रो, भक्तिकृत्यमकृत प्रभुचैत्ये ॥ २४

धूलिधूसरपद एव तदानी-मागतो जिनपतिं प्रणिपत्य ।
दूरपूरितमनोरथवेग, स्तोतुमारभत मन्त्रिवरोऽसौ ॥ २५

त्वद्गुणान् गदितुमीश ! समग्रान्, न स्वयं सुरगुरोऽपि समर्थः ।
गोचरोऽस्यसि न मादृशवाचां, मौनमेव हि तव स्तवहेतुः ॥ २६

त्वां निरर्थकगिराऽपि तथाऽपि, स्तौमि विश्वनुत ! मुग्धतयाऽहम् ।
प्रीतये निजशिशोः स्फुटलाला-भ्यासि लब्धरवचांसि गुरूणाम् ॥ २७

न क्षमोऽयमहितानपि हन्तुं, स्वं कुटुम्बकमय च मुमोच ।
जल्पिता जिन ! परैरिति दोषा, प्रत्युत स्तवनतां तव जग्मुः ॥ २८

भाषितं भुवनभूषण ! भित्त्वा, कर्म निर्ममपते ! भवतेदम् ।
श्रूयते त्वदभिधाऽपि कदाचिद्, यत्र तत्र न करोति निवासम् ॥ २९

नाऽऽप्नुवन्ति भवकर्मनिकेता-द्यतस्तव गतस्य पदं ये ।
भ्राम्यते भ्रमवशाज्जिन ! मुक्त्यै, तैर्वृथैव पृथिवीवलयान्तः ॥ ३०

त्वं मनोभवमपास्य पुनस्तज्जन्मभीरमुच स्वमनोऽपि ।
किं हरन्तु हरिणीतरलाक्ष्य स्तावकं तदमनस्कमरिष्ट ! ॥ ३१

प्राप्य रत्नमिव पुण्यपयोधेस्त्वां हृदि प्रणिदधाति जनो यः ।
स प्रयाति पुरुषोत्तमभावं, पश्य न स्वपिति किन्तु भवाब्धौ ॥ ३२

यामवाप्य न नमामि भवन्तं, तां न निर्वृतिमपि स्पृहयामि ।
त्वत्प्रसादवशतस्त्वयि भक्तिर्भातु मे जिन ! भवेऽपि भवेऽपि ॥ ३३

निर्मितस्तुतिरिति प्रतियातः, कृत्स्नमेष सुकृती कृतशौचः ।
स्नानहेतुकरशान् गुरुगाम्भःपूरितानयमचीकलदिन्द्रैः ॥ ३४

श्रावकाः प्रतिपदं हृदयाग्र्यन्यस्तहस्तधृतकाञ्चनकुम्भाः ।
निस्तरीतुमिव संसृतिसिन्धुं, कुर्वते स्म निरपायमुपायम् ॥ ३५

शुद्धसद्मपतिकीर्तिलतानां विष्टपत्रितयगर्भगतानाम् ।
आतपत्रपटली जिनश्रीर्नादिकन्दवदिव विरराज ॥ ३६

अत्युदारतरनर्तनगातैरासवेन महता प्रहृताथ ।
प्राप मन्त्रितिलकः किल कर्मप्वसिनो जिनपतेरथ चैत्यम् ॥ ३७

कुङ्कुमाम्बुभिरसिस्नपदीशं, श्रावकैः सह यथाविधि मन्त्री ।
तैर्विधौतननुरेष तदाऽभूत्, पर्वतो विमल इत्युचिताह्वः ॥ ३८

अङ्गमण्डनमखण्डनमासीन्निर्मितं मृगमदैर्जिनभर्तुः ।
वल्गुसन्नहनसन्निभमुच्चैः, कर्मकूटरिपुकोटिजयाय ॥ ३९

भूरिपुष्परचिता जिनभर्तुर्लम्बिता कृतिभिरर्चनमाला ।
अग्रभूषण इव स्मरमुक्ता, भक्तयो वपुषि भूषणमासन् ॥ ४०

तैस्तथा जिनगुणैस्तिमिरैरपि निर्मितेऽथ धूपधूम्रभूमैः ।
सस्पृहेव सचिव मुकुनश्रीः, कौतुकादभिससार यथाऽसौ ॥ ४१

आरात्रिकं कृतमथ प्रथमस्य तीर्थभर्तुः पुरः स्फुरदुरुद्युतिचक्रवालम् ।
उच्चावचप्रसरणैर्निजधाम सद्मदीपद्विषं कुसुमवृष्टिविराजमानम् ॥ ४२

इत्थं प्रेक्षणकक्षणाहितमनाः सम्पूज्य विश्वत्रयी-
पूज्यं नाभिसुतं समाप्य च तथारूपामिहाष्टाह्निकाम् ।
मन्त्रीशः प्रतिलाभितव्रतिततिः शत्रुञ्जयोर्वीधरा
दुर्गाणो कृतमङ्गलः समजनि श्रीनेमिसेवोत्सुकः ॥ ४३

किञ्च—

शौर्यैर्वज्रधरस्य दैत्यभरतामाचार्ययोः प्रज्ञया,
दानैर्देवगवीमणिक्षितिरुहां स्वर्गाधिपः गर्वितः ।

एकेनैव विभूषणेन भवता श्रीवस्तुपाल ! क्षिति-
स्तं निर्जित्य मुदा तवाऽऽशिषमदादेवं मेदायुर्भव ॥ १

कल्पान्तोद्भ्रान्तभास्कत्करनिकरनिभो विभ्रमन्तः समन्तात्,
सन्तापस्त्वत्प्रताप-वलदनलभवः केन शक्येत सोढुम् ? ।
मन्त्रिन् श्रीवस्तुपाल ! त्रिजगति यदि ते कीर्त्तिलेखेव न स्या-
दन्त पीयूषपेया बहिरपि च मुहुश्चन्दनोद्वर्त्तनानि ॥ २

भासि दौस्थ्यतरुखण्डखण्डनै-र्वस्तुपाल ! भुवि दान्तिकुञ्जरः ।
चित्रमत्र किमु शङ्खमर्दनं, यत् त्वया क्रमणलीलया कृतम् ॥ ३

काव्यमेतदरिसिंहनिर्मितं, सर्वलोकसुखतयैव रङ्गभूः ।
वस्तुपालसचिवेन्द्रकीर्त्तिभि-र्नर्त्तकीभिरिव यत्र नृत्यते ॥ ४

प्रतिसर्गं प्रबन्धेऽस्मिन्नरिसिंहविनिर्मिते । इमान्यकृत चत्वारि, काव्यान्यमरपण्डितः ॥ ५

## ॥ इति सुकृतसङ्कीर्त्तननाम्नि महाकाव्ये शत्रुञ्जयवर्णनो नाम सप्तमः सर्गः ॥ ७ ॥



सचिवः समं सपदि सद्वजनै-रथ देवपत्तनमगान्नगरम् ।
प्रणनाम कामलयिनं नयन-प्रियमिन्दुलाञ्छनमिहोग्रमहाः ॥ १

विधुमौलिमौलिविधुधामभरै-रिह मे भविष्यति सदाऽभ्युदयः ।
इति पाथसामधुमपुत्र पतिं, कृतवासमैक्षत स मन्त्रिपतिः ॥ २

इह सोमनाथमुकुटोल्लसितैः, सरिदम्बुभिर्विधुविभाभिरपि ।
सततप्रवृद्धमिहलहरी-निवहध्वनिध्वनितदिग्वलयम् ॥ ३

सततान्तरालशयविष्णुवपु-र्विभवर्द्धिभाभिरिव मेचकितम् ।
उदयत्तदीयशयनीयफणि-स्फुरदस्थिराग्निनिभफेनभरम् ॥ ४

सलिलेन विश्ववलयप्रलयः, समये मयैव रचनीय इति ।
मुहुरीरितापहतवीचिभरै-र्जनयन्तमन्वहमिहाभ्युत्सनम् ॥ ५

पुरुषोत्तमो हृदि मदीयसुतः, गिरसीश्वरोऽपि विदधाति सदा ।
प्रमदादुदारतरगर्भमिव, प्रकटं नटन्तमिव वीचिकरैः ॥ ६

अयि वज्रभाजि कुपिते सुपतौ, कृतरक्षणं क्षितिभृतामभितः ।
स्फुरितोर्मिबाहुभिरिति कीर्त्तिततो-र्जगति क्षिपन्तमिव फेनमिषात् ॥ ७

१ ग-महायुर्भव ॥

नयनाम्बर्त्मनि परिस्फुरती, दुरितान्धकारपटलीं विकटाम् ।
दलयन्ति मे जिनमदीश ! कदा भवदीयपादनखदीप्तिशिखाः ? ॥ २३
भुवनैकनाथ ! भवदीयवपु-र्विपुलप्रभापयसि मग्नमपि ।
द्वितयं कदा नयनयोरिह मां, हिमहारतारगुण ! तारयति ॥ २४
तदपीयत श्रुतिपुटेन यशः, सततं विपण्णविविपत्रदि ते ।
भवदङ्गदीप्तिममुना यमुना-जयिनीं धयामि नयनेन कदा ? ॥ २५
नलिनादिपुष्पनिवहेन सुरै-र्यदपूजि पादयुगमीश ! तव ।
जिन ! तेन पङ्कजनिभेन कदा, जनयामि पूजितमिवाऽऽत्मगिरः ॥ २६
इति गद्गदाश्रुपुलकाकुलितं, कलयन् मनोरथमनन्यमनाः ।
सचिवः शिवातनयमात्मनयः, क्षणमेकमैक्षत पुरोगमिव ॥ २७
अथ कल्पितासिलविभातविधि गिरिमारुरोह सह सज्जनैः ।
सचिवो जिनक्रमनखेषु पुरो-गमितेन मूर्ध्न इव मङ्क्षु हृदा ॥ २८
तदनु प्रमोदरभसेन रजः-लुतपाद एव विननाम जिनम् ।
अपि चैष नेत्रगमिताक्षणः-प्रसरक्षणं निभृतमीक्षितवान् ॥ २९
रचिताङ्गशौचविधिभिन्द्रिगणै, सहितो जिनस्नपनहतुरथ ।
जिनभक्तिरागमिव मूर्तमसौ, कलशेषु कुङ्कुमजलं न्यदधात् ॥ ३०
अथ केऽपि भक्तिभरभासुरिता, स्फुरिता जिनस्य पुरतः परितः ।
स्वयमुत्सवं विदधिरे मधुर-ध्वनिगीतिरीतिमयवाद्यलयम् ॥ ३१
वदनाग्रभागगतपाणियुग-स्थितभेरिदण्डमिषदन्तकरः ।
गुगुभे करीन्द्र इव मन्दरव, किल कोऽपि पापतरुपातपटुः ॥ ३२
अपरः पयोदरववादभव-जिनदं मृदङ्गमपि वादितवान् ।
ननृते दरद्दुरितभोगिशतैः, कृतिनां मनोवनमयूरकुले ॥ ३३
अपरस्य वंशमपि वादयतो, मधुरस्वरैः प्रमदिनां ध्वनिनाम् ।
पदमालि परपुटकेन रसात्, तदनेति कर्णे इव नेत्रयुगे ॥ ३४
अपरः पिबन्नपि जिनतनुभू-वदनेन्दुदर्शितसुधा स्थिरदृक् ।
मुरजानुकार जनयन् जनता-हृदि सम्मदः कलितगर्जनिनादान् ॥ ३५
चटुला नटी सरसवृत्तवशा-दिह रङ्गभूमिमुना शुशुभे ।
कुलदेवतेव तडिता तरला, जलदपुर्नजिनरतेः पुनः ॥ ३६
इति सम्मदेन जिनमस्नपयद्, गुरुनाम्नि दर्शितनवसत्रया ।
कलितो यथासमयि दैवतरः किल दक्षवीक्षसरसो दक्षो ॥ ३७

स्वहृद प्रमोदविशदस्य रसात्, परमाणुमि पुर इव प्रसृते ।
सचिवेन सारधनसाररसैर्नवमङ्गमण्डनमकारि विभो ॥ ३८

कुसुमायुधस्य कुसुमानि मनागपि सम्मुखानि नहि यत्र ययु ।
इह तानि तीर्थकृति सङ्घटयन्, स बभौ कृती मदनतोऽप्यधिक ॥ ३९

यमुनौघसङ्गमधिया सचिव प्रथितऽय धूपमयधूनमरं ।
प्रमदेन तत्क्षणमकारि नम सरिदम्बुनि घुसुणैर्भि सवनम् ॥ ४०

अथ तामस कवलिता चलिता अनरैतवन भगमुदिरता ।
नवदीपिनापरिहरण चिर, निरराज यजिनमथ सचिव ॥ ४१

स्फुटमष्टकर्मंमथनोऽयमिति, प्रथयन्निहाष्टदिवसानि महम् ।
स्वयमष्टमूर्तिसुरवृन्दुसम, सचिवोऽष्टमु न्यधित दिक्षु यत्र ॥ ४२

सचिवस्य दास इव नन्दभितो, जलवाह एष गिरिमूर्ध्नि वहन् ।
न ववर्ष सद्गजननार्त्तिभयात्, गुदिताम्बपरि सम्लानि पुन ॥ ४३

देया स्वामिन् ! पुनर्म सुरतपुरपुरोडौकनानीति जल्प-
न्नानन्दस्पन्दसोरैरिव धरितमना नेमिनाथं प्रणम्य ।
नाम नाम निकाम विधिवदनिधुर मन्त्रिमान्योऽप्यमम्या
न्नान्यभ्युग्रमाण्यापि पुरोकवपु पर्वतादुत्तार ॥ ४४

अथ गिरीशतटीषु मनीषिणां, परिवृढः परिपूर्णमनोरथः ।
षडपि तत्र ददर्श ऋतून् कला-शुचिरयं चिरयन्त्रितविभ्रमान् ॥ १

प्रकटितायसकर्तरिका मधौ, मधुसखस्य भटा इव किंशुकाः ।
भ्रमरसङ्गसितेतरविस्फुरत्-सुमनसो मनसो ददते मुदम् ॥ २

इदमभूद् दलयन् नलिनीः प्रियाः, मम मद्-परिखण्डनहेतवे ।
इति हिमस्य भिदामहिमद्युतिः, स्म तनुते तनुतेजितविष्टप' ॥ ३

स्मरशिखी तनुमानिव चम्पकः, कुसुमितो मधुपावलिधूमितः ।
दहति काननसीमनि काञ्चन-च्छविरहो ! विरहोषितयोषितः ॥ ४

स्मितसरोजमुखीमुखवासना-सुरभिमधविशेषितसौरभम् ।
परिहृतापरवल्लिमधुव्रती-पचकुलं बकुलं प्रति धावति ॥ ५

सुमनसां त्वमसि स्थितिभूस्त्वया, जयति विभ्रमसौ कुसुमायुधः ।
मधुमितीह रसाल्ररसालसा, पिकवयः कवयः कवयन्त्यमी ॥ ६

स्मरनृपस्य चरत्वमुपागता, द्विजचया मधुरध्वनिशालिनः ।
मधुलिहः सुमनस्सु दधुः पदं, तिलकजालकभावविभूतयः ॥ ७

दधुरनङ्गनिषङ्गतुलामधो-मुखशिलीमुखराजिविराजिताः ।
स्फुटविकाशमुखाः कमलाकराः, न पथि कं पथिकं प्रति भीतये ॥ ८

स्तुतगुणं कुतुकेन मधुमते-रिव स्वाकुलितैः सुमनोमयम् ।
मधुसखाय मधोर्विनियोगतः, शरचयं रचयन्तितमां लताः ॥ ९

व्यथयति प्रथितारुणतेजसो, दहनमन्त्रमयादिव शक्तः ।
मधुसखोऽयमशोकतरुवालतत्-कुसुमतोऽसुमतो विरहातुरान् ॥ १०

मलयजद्रुमसङ्गिभुजङ्गम-स्फुरितफूत्कृतिसम्भ्रमसम्भृतः ।
पथिकलोकदृशां मलयानिलः, सुविषमो विषमोहमिव व्यधात् ॥ ११

कमलकोमलकोशकुचोन्नते-रलिकलालिकशासितसम्पदः ।
वततिकातनिकायवधिवो-ऽधिकमशोकमशोभत पाणिरम् ॥ १२

कमलकान्तिहरीं कुरुतां नयन्, सह हिमाद्रिदिनेन विभावरीम् ।
कमलबन्धुकलोन्नमनो बभौ, शुचिरयं चिरयन् दिवसश्रियम् ॥ १३

द्रुतसनेतदिनाधिपतिप्रभा-परिगलत्तरतोयतनीलया ।
अनिलकोलशिरीषरजश्छलाद्, दिशदनंश्छचो बभु ॥ १४

अहर्निहारुणपात्रि मितेतरो, वन ! विभाप्यपराऽत्र सितच्छवी ।
भ्रमति भूनृभुवा नवपाटले, विचकिलं च शिरोषि मुहुर्मुहुः ॥ १५

१ ग-पथिकलोक°

तरलतारलतागृहपङ्कज च्छदनच दनचन्द्रमरीचिभि ।
तपनतापनताकृतिरप्यसौ, रविवरोऽतिवरोरुषु जृम्भते ॥ १६
नभसि दर्पणतुल्यतडिल्लता, जलदपद्धतिरद्भुतडम्बरा ।
मदनसैन्यगजत्वजयद् बभौ, कृतरवा तरवारिसितेतरा ॥ १७
वियदर्मामिलदर्क निशाकर-द्वयमये नयने भयतो मृशम् ।
यदतुला तडित घनमालिका विकरवा करवालमिवाक्षिपत् ॥ १८
यदयमेतदवाप्य तपस्विना, हृदि हतोऽपि त्रिजीव मनोभव ।
अपि भुजङ्गभुजा शुशुभे सुधा-स्रवचन वचन शिखिना तत ॥ १९
मदमिवर्धितसिन्धुमहीरुह-भ्रमविशोषकमेतदिति क्रुधा ।
अधिककर्ममह सहसा घनै, कवलित वलित तडिता पिपात् ॥ २०
अपरता परतापककर्पिका-हतककेतककंकलिषु षट्पदी ।
अमलकोमलकोरकसौरभ स्थितिषु जातिषु जातरसाऽभवत् ॥ २१
मलकलोलमधुव्रतमन्थुलाऽ म्बुजमुखी जघनोग्वलसैकता ।
शरदि हसरवेण समाश्रिता, धृतरसा तरसा तटिनीवधू ॥ २२
कचन भर्तरि याति तपात्यये, घनघटाश्रुजलानि मुमोच न ।
विरहवद् दधती तपन व्यथा प्रदमम दममङ्गलशङ्कया ॥ युग्मम् ॥ २३
पदमधत्त गतस्य पयोमुच, सुहृद् ग्यमसी शिखिना गण ।
गलितपन्नमयातपवारणैरनिमिव विभव महसा क्षिपन् ॥ २४
समुदिते मुदितेऽम्बुरुहि प्रिय कुवलय वलय सरिता तथा ।
अभून सम्भृतसम्पदर्यमा च्छविमल विमल च विधुर्मह ॥ २५
स्वरुचर्विजयाय निशाद्विष, सहसि साहसिकोरु विभावरी ।
प्रतिदिन परित परिवर्धितो रमहिमा महिमानमुपाययौ ॥ २६
तुहिनम दतरा मलिनऽम्बिनी-मलिनि भुवनि रागपरामपि ।
फरिकाभिरहो [1] शतपत्रिका, सह सितं हसित परित वते ॥ २७
पदमकारि मुख मुदा सदा, त्रिभल्कान्तिभि र्कुङ्कुममण्डिते ।
हिमरुच कमलस्य च सम्पदा, हवनिकामनिकारनिनुन्नया ॥ २८
तुहिनवाहिनवाद्गुनवातभी-रुचितरुचिररुकुलैस्तवान् ।
परतनूरतनूष्मभि भास्वरा-तपननि घननि स्तनम डल ॥ २९
हिमभरस्य तपःप्रतिनोन्नत-यैनमहीन्गृह एव मुखो नृणाम् ।
निशरैपरापि निशीमनाथम, दिनकरो न करोति कथंचन ॥ ३०

घ अपि मु° ॥ २ एतत्पद्य क-खा पुस्तकयोर्नास्ति ॥

पुलककम्पितसूत्कृतिभिः परि-ष्वजनकर्म दिशन् हरिणीदृशाम् ।
हिममयः पवनो ननु कामिना-ममितकामितकारणतां ययौ ॥ ३१

पथिककाननजन्ममनोभव-ज्वलनसम्भवधूममरोपमम् ।
नवलवङ्गरजः पवनाहतं, जगति रङ्गति रङ्गितषट्पदम् ॥ ३२

दिनमयं नमयन् सहसा कुल-स्मरजनी रजनीः परिवर्धयन् ।
विरहितारहितासु सुखोर्मिका-रसमयः समयः शिशिरो ययौ ॥ ३३

सततकुसुमितानृतून्नरोपा-निति समकालमिहावलोक्य मन्त्री ।
अधुनुत विदितप्रभुप्रभावा-तिशयविचारचमत्कृतः किरीटम् ॥ ३४

शैलेऽस्मिन् पुरुहूतपौरमिथुनैर्मन्त्रीशनिर्मापित-
श्रीमन्नेमिजिनेश्वरोत्सवमवत्कौतूहलाकारितैः ।
रन्तुं नित्यषडर्तुभूतिविभवप्रक्षोभवल्लोल्यया,
सानन्दैरतिमन्दनन्दनवनीमुक्तस्पृहैः सस्पृहे ॥ ३५

कुसुमावचायमनसां श्रवणे, सुरयोषितामथ सरोजजुषि ।
कुसुमादुपेत्य निभृतध्वनयो, दधतीव भेदमलिनो मलिनाः ॥ ३६

वयमेव राज्यपदवीं गमिता, मदनेन सम्प्रति किमेभिरिति ।
अवचिन्वते स्म कुसुमानि तदा, रमणैः समं सुरकुरङ्गदृशः ॥ ३७

नवपुष्पमूर्ध्नि यदकारि तप-स्तपनातपेन धृतरागभरैः ।
तरुणीकरग्रहणपुण्यफलं, नवपल्लवैरिदमलाभि ततः ॥ ३८

नवपल्लवा निजविभूतिहृतो, वनवर्तिनः स्फुटमशोककुषः ।
परिकम्पिनो हठवशादरुणी-स्तरुणीकरैर्विभिदिरे रभसात् ॥ ३९

कुसुमार्पणेषु रमणः सुदृशा, प्रथितेऽन्यनाम्नि लघुतां गमितः ।
हृदयात् तदान्तरतलेन सह, श्वसितेन तूलवदकर्षि बहिः ॥ ४०

ददता प्रसूनमपराभिधया, दयितेन वक्रनिभयाऽभिहिते ।
हृदि मानिनी ननु निधाय रुषं, सजलप्रमाणमनुष श्वसितम् ॥ ४१

उदितं प्रियेण निभृतं चतुरा, परगोत्रमश्रुतवती च रहः ।
तदुरस्थपुष्परजसि श्वसितं, व्यमिताधमश्रु च तद्दृश्यने ॥ ४२

सृजता स्रजं शिरसि पद्मदृशो, मृदु चुम्बता प्रियतमेन परा ।
अपि शेमुषीक्षयतया न रसाद्, ददृशे परा न तयाऽपि रुषा ॥ ४३

सकलस्वकीयकुसुमस्वहृति-प्रतिपन्थिनीः प्रति सुरं सुदृशः ।
अमुचन् शिलीमुखशतानि रुषा-, समभूयवस्तदि तान्यपि ताः ॥ ४४

अथ काननान्तरविहारयत-न्नवखेदभेदरभसेन ययु ।
दयितैः सम मृगदृशोऽम्बुनिधि प्रतिहस्तकं सवनहृतु सर ॥ ४५

तरुणीसमागमवशेन जवात्, किल पल्वलोऽजनि मुदा द्विगुण ।
विलसत्तरङ्गकरकोटिरय, तिरयन् निजा कमलिनीदयिता ॥ ४६

अतिदूरत सरभसं रसभाक्, समुपेत्य लोलविषयव्यसन ।
कुचयोर्विदृढय सुदृशा निलय, प्रययौ तरङ्गनिकर सपदि ॥ ४७

दयितेषु तोयजवनेषु गते, रभसेन यत्र कलहसकुल ।
सरसी रराज सुदृशा वदनैः, कुचमण्डलैरपि च फेनभरैः ॥ ४८

हरिणीदृशा कलितरागभर, कुचसङ्गमेन परिवृद्धरसम् ।
बुडदम्बुजन्मकपटेन सर, परिमीलयत्यतिमुखीव दृश ॥ ४९

अवलोक्य कोऽपि रभसेन जन, विपरीतलोचनमुदाररस ।
हरिणीदृशा श्रुतिसरोरुहता-मनचुम्बनव्यतिकरो हसित ॥ ५०

अभिसेचनेन नयनप्रसृति प्रसरत्कराक्षरसतोऽनुपति ।
अपरा सखीं प्रति करप्रसृति च्युतनीरशून्यजलकेलिरभूत् ॥ ५१

कुतमुद्धृतेऽम्बुजमिति प्रकट, त्रुटितस्य वारिणि करे कमितु ।
विदितस्य वीक्ष्य मुखमस्य नवा, रमणी न किं क्रिमकृत त्रपया ॥ ५२

इतिकेलिरसप्रसन्नमनस स्वर्गौकसो भास्कर,
यातेऽप्यम्बुनिधिं सर कुमुदिनीबोधप्रवृद्धश्रिया ।
श्रीमन्त्रीश्वरवस्तुपालयशसा शुभ्रे सत्यैवाम्बर
क्रोडे वैभवपिष्टपिष्टपतया स्तोमेन जग्मुर्दिवम् ॥ ५३

किञ्च—

भारत यावदखर्वपर्वतपटा गुर्वीयमुर्वी नय,
तावन्नन्दतु वस्तुपाल । जगतापुण्यैरगण्यैर्भवान् ।
येनैता भुजगाधिपत्यव भुजे वि यस्य नागाङ्गना
गोष्ठीगीतिमयधरा श्रुतिरसैराचान्तचित्तोऽभवत् ॥ १

अद्यमपि कृतार्तिं द्विजपतिं स्व मूर्धनि स्वर्धुनी
धीरे धारयत जापतिरसावस्यो गुणग्राहिणाम् ।
सद्य सन्ततमन्वयु यमुमरे पुण्यानि पृथा शिरो
नूनं दानवतामुभावपि गुणावतो यमन्ते गुणौ ॥ २

श्रीवस्तुपाल ! रणभाजि भवत्कृपाणे, धाराधरेऽपि परवारणविभ्रमेऽस्मिन् ।
उत्पत्य कोपतरलं सहसा जगाम, सङ्ग्रामसिंह इति स स्वयमेव भङ्गम् ॥ ३

वस्तुपालसुकृतामृतप्रपा, काव्यमूर्तिररिसिंहनूतिता ।
कण्ठदघ्नरसपायिनः शिरः, कम्पयन्ति किल यत्र कोविदाः ॥ ४

प्रतिसर्गं प्रबन्धेऽस्मिन्नरिसिंहविनिर्मिते । इमान्यकृत चत्वारि, काव्यान्यमरपण्डितः ॥ ५

॥ इति सुकृतसङ्कीर्त्तननाम्नि महाकाव्ये षड्ऋतुवर्णनो नाम नवमः सर्गः ॥ ९ ॥



तदनु वदनकान्तिप्रत्यक्षेन्दुः श्रुतीन्दुः, समुदितमदपात्रं पूर्णयात्राभिलाषः ।
इह विहितनिवासः काशसङ्काशकीर्तिः, जगितवितत्तकर्मा निर्ममे सङ्घभोज्यम् ॥ १

मलयजमयमम्भः पादयोरुत्तमाङ्गे, घनमथ घनसारं चीवरं चारु चाङ्गे ।
यश इव निजमीदृग्रूपमारोप्य तेन, स्वयरसमुपनीताः साधवोऽगाधबोधाः ॥ २

सन्नं यत्र तदापि रत्नकनकस्तोमैस्तुच्छाशये,
तस्मिन् यच्छति वाञ्छनाधिकतरं दीनेषु दूरादपि ।
मन्येऽभूरि ततो गभीरिमजितो रत्नानि रत्नाकर-
स्तस्य स्थैर्यनिराकृतश्च करदो हेमानि हेमाचलः ॥ ३

किं सूते कर एव हेमनिकरं श्रीनेमिभक्तिक्रिया-
तुष्टे रैवतकाद्रिदैवतकुलैः किं वा निधिः पूर्यते ? ।
इत्थं याचकसञ्चयस्य किमपि स्वस्यापि वाञ्छाधिकं,
तस्मिन् यच्छति खेचरेष्वपि चमत्कारश्चकार स्थितिम् ॥ ४

तदानीं दीनौघे मुहुरपि गृहीत्वा बहुतर, स्वयं निर्विण्णेऽस्मिन् ददद्यमनिर्विण्णहृदयः ।
अहो ! किञ्चित् कोऽपि क्वचिदपि न याचेत वचनं, निरादुर्घार्यदं धवलकपुरे गन्तुमुदितः ॥ ५

दुष्कर्माद्रिपविः पवित्रमहिमा नास्यां कदाचिन्महा-
मोहध्वान्तरविः प्रविश्यति भृशं सङ्घो महोत्साहवान् ।
इत्थं पापलिपिं विलुप्य करणे मालोपमं वामन-
स्थल्याः पुण्यदिनं चकार सुकृती कुर्वन् प्रवेशोत्सवम् ॥ ६

कर्पूरागुरुधूपधूमपटलैर्लक्ष्यमाणैः प्रति-
ग्रामं तीर्थकृतामनेन कृतिना ये जज्ञिरे वारिदाः ।

तैरेव त्रुटिते जले पथि तथा प्रेम्णेव वृष्टं यया,
सपूर्णानि सरोवराणि न पुन सिक्तोऽपि मार्गोऽन्तसान् ॥ ७

स्वस्थानप्रसृतस्वजलमज्जनप्राग्भारसंघ परा स्भास्भपुर प्रसृ चरमनोवेगावकृष्टैरिव ।
सा रु सज्जनै समुज्झितमोभारैस्तदौ सुकृतो, मध्ध्वर्धि इलक्कामिधपुरोपान्त प्रपेदे कृती ॥ ८

स्मेरत्कालीनहर्म्यस्फुरितपथतया रागमासाद्य सद्यो,
लीलालोलपताकाञ्चलतरलचम कारिचञ्चत्कटाक्षा ।
जातक्षोभा पुरीय सविपुलपुलकाकीर्णदूर्वाङ्कुराग्रै,
प्राप्ते श्रीवस्तुपाले सति सचिवशचीवल्लभे वल्लभेऽस्मिन् ॥ ९

इय सर्वाङ्गीणप्रगुणितविभूषा किल तदा, तदाश्लेष यावत् क्षणमिव पुरी भासुररसा ।
अभूद् त शून्या हृदय इव याते पुरजनै, समं श्रीमन्त्रीन्द्र प्रति सरभस वीरधवले ॥ १०

श्रीवीरधवलन्तेज.पालाभिधसचिवमध्यग सचिव ।
त्रिपुरपरीतिरथापितहर इव हरति स्म तत्र मन ॥ ११

भास्वन्ति स्थानभेरीमुरजमरजनिध्वानसन्तापभाति-
भ्राटाहङ्कारदेवीजनरभसपरीम्भसस्भट्टै ।
शक्राद्यैर्देवचक्रैरपि सचिवपति स्तूयमानस्तदानीं,
प्रारेभेऽसौ प्रवेष्टु पुरि पुलकिवपु पौरदृश्यीयमान ॥ १२

अथ पृथुक्रमतुल्यैस्तदु सद्मन्त त्रिभुवनमपि शब्दैरब्दसयावदूकै ।
नवमगितिविदग्धा मागधा भागधेय प्रगुणितगुणगाम तुष्टुवुर्मन्त्रिराजम् ॥ १३

जय जय नयशालिन्नासमुद्रान्तपृथ्वी वलयमिलितकीर्ते ! मन्त्रिचक्रैकचक्र ! ।
दलितकलिविलास ! प्रस्फुरत्तीर्थयात्रा कृतकृतयुगनव्यप्रस्तुते ! वस्तुपाल ! ॥ १४

बलिरपि कलिकाले याचकालीकराले, यदि भवसमविष्यद् दानवो दानशौण्ड ।
इति मनदवलोकाद् विश्रुयन विबाऽपि, स्वयमयमगमिष्यद् देव ! पातालमूलम् ॥ १५

श्रीविश्रामाल्पदमपि भवाद् दासयस्याशु दृष्ट,
स्पष्ट तुष्टो जनयसि जन र्थविनिद दरिद्रम् ।
सामर्थ्यं ते स्वयमिति समालोक्य धाता न सौख्य,
नो दौस्थ्य वाऽलिपि ! नृषु लिसन यथाभावबीया ॥ १६

सद्म सद्गतगौरवे सह सदा कार्यो न कार्ये पुन
नाचेरावगनाद्दश बल्पत पुत्री पुराऽपाठि यत् ।
तस्या तपठनस्य नि शठतया पाठ ददया दवे,
मुद्रा हाटकपट्टिकेव सलिपि श्रीवस्तुपाल ! त्वया ॥ १७

श्रीमन्त्रिमुख्य ! भवदीयविपक्षलक्ष दुष्कीर्तिभिस्त्रिभुवन परित परीतम् ।
क्वाह स्फुरामि तव कीर्तिरितीव वक्तु, कर्णोपकण्ठमगमत् पलितच्छलेन ॥　१८

श्रीसोमान्वयवार्धिवर्धनविधो ! मन्त्रीश ! वागीधरी
लीलावन्प ! भवानकल्पि जगत साधारणो वेधसा ।
इत्थ दाननिदानवैभवभवद्वालम्भरस्थापितै
रैवैभिर्विभवाक्षरैर्विभवभाग् दुःस्थोऽपि सौख्य दधौ ॥　१९

कोपे पापकृतसमार्गमसम चक्षु क्षिपन्ती पुन,
प्रीतौ मौक्तिकदामसोदरमिव भ्रूरेव मन्त्रीश्वर ! ।
उल्लासान्निधन धने च ददती प्रत्यर्थिनामर्थिना
मन्येषा किमु चापयष्टिरतुला किं कल्पवल्लिस्तव ? ॥　२०

आ दोलयन्ति कृतिनस्तव कर्णदोला लीलासु ये गिरमुदारमुदा रसाढ्याम् ।
भूकल्पवृक्ष ! तनुषे निजमौलिकम्पात्, तेभ्य फल दिवि यश कुसुमान्युदस्यन् ॥ २१

का शक्तिर्बुसदा सुधारुचिरसास्नेक्ष क्षयी प्रायते,
तै पश्चान्निरितोऽखिलैरपि समे निघ्नन्तु दैत्यास्ततः ।
अक्षीणस्य सदा त्वदाननसुधाभानो पिबन् वाक्सुधा
मेक सख्य वरस्य वीरधवलो यावन्न सन्नह्यते ॥　२२

असौ ते सचिवावतस ! निबिडाहङ्कारकारस्करा-
घटम्भस्थिरपौरुषद्विपमहाकुम्भभ्रम भेजतु ।
कुम्भावभ्रमुभर्तृकद्रुरहरिस्फूर्जत्करास्फालन-
त्रस्ताऽसौ परिहृत्य नित्यसुखिता विश्राम्यति श्रीरिह ॥　२३

बुद्धिर्लतेव तव विस्फुरिता समस्त शाखाम्बुतैरिह भते हृदयालवाले ।
श्रीवस्तुपाल ! भुवि यत्प्रभवा प्रसून-मालेव मौलिषु न कैरधृत त्वदाज्ञा ? ॥　२४

श्रीसोमान्वयकुट्टिमोद्धृततुलापत्र पवदुर्बल श्रेयोयष्टिरनिष्टविष्टपविषसन्दोहलोहार्गला ।
श्रीविश्रामतरु पराक्रमकरिस्तम्भो रिपुक्षोणिभृद्-दम्भोलिस्तव भाति गूर्जरधरोद्धारैकधुर्यो भुज ॥ २५

अमो भृश सन्ततसञ्चरिष्णु-लक्ष्मीपदालक्तकरक्तकान्ति ।
भवत्कराम्भोरुहवद् विभाति, कृष्णारिनाराचिकुरालिपालि ॥　२६

असत्र सत्रद्वे यदिह विहरन्मार्गणगण स्मरस्सेरे मेरो कटकमटित कपनिटपी ।
इति व्यक्त युक्त सचिवकुलकोटीर ! करज-व्रजव्याजेनाय मणिमुकुटबन्धस्तव करे ॥　२७

किल जगति भवद्गति विलोक्य, स्वगतियश क्षितिनीरव सुरेभा ।
सचिव ! तव भुजेऽपि भूमिभार, दधति पदात् पदमप्यमी न चेलु ॥　२८

प्रसरकनककुतुकेऽस्मिन् सेवका देव ! कामं, तव सचिव ! नमन्तु प्रीतिमन्तः समन्तात् ।
नलदचिजगीर्वाधीनभाल्लस्थदोस्त्या-दरनतय इयामी भूतिभार भजन्ते ॥ २९

इति वर्ण्यमानगुणग्रामो रसो-द्भुरवन्दिवृन्दवरभारतीभरैः ।
जिनदेवतालयपुरस्सरं शनैः, प्रविवेश पत्तनमसौ महामतिः ॥ ३०

अथ तं विलोकयितुमाकुलं कुलं, सुदृशां गवाक्षपदमाप कौतुकात् ।
अचकत् सदाङ्गस्तसुकृत अग क्रियमाणकर्मेतदिति दर्शितादरम् ॥ ३१

विरचय्य काऽपि मणिकुण्डलं श्रुतौ, द्रुतमेकमेव चलिता कुतूहलात् ।
जगदुन्नमाननकुतोभयस्मय-स्वयमागतद्युमणिमण्डला बभौ ॥ ३२

औत्सुक्यभावरसभूषणवैपरीत्या, कर्णावलम्बितमणिग्रथितकङ्कणाभ्याम् ।
काचिच्चकार जिनकुञ्जरकुम्भशोभे, पीनोन्नतस्तनतटे मुकुटावबन्धम् ॥ ३३

औत्सुक्यतः काचन चित्रकार्थं, करे गृहीत्वा मृगनाभिमेव ।
स्निग्धाञ्जनभ्रान्तिवशात् किलन्ती, नेत्रद्वये तत्र दधौ मृगन्धम् ॥ ३४

वैकल्यमाल्यमिलितं कुसुमैरपरस्या, पश्चात्तरत्भ्रमर कबरीकलापः ।
सशायक कुसुमकार्मुकसन्निधान, पृथ्वीधराभिव निहन्तुमधादनङ्गः ॥ ३५

ताडङ्कमेकं कर एव काचित्, तदा वहन्ती चपलं चचाल ।
त्रैलोक्यजैत्रस्मरचक्रवर्ति पताकिनीचाप्रविलासिचक्रा ॥ ३६

आधात् पदे सपाद काचन काञ्चनस्य, हिञ्जीरमङ्कुरितकौतुकमेकमेव ।
स्त्रीषु स्वकीयविजयध्वजिनीषु विश्वे, दत्तं नु वीरकटकं मकरध्वजेन ॥ ३७

पूर्वैकमेव निजमञ्जनमञ्जु नेत्र-माबिभ्रती परमनञ्जनमेव काचित् ।
आभूषितं नु सहजं नु विशेषहृद्यं, जालागता किल विचारयतीव लोके ॥ ३८

काचित् तदा मन्त्रिवरं निरीक्ष्य, कञ्चिद् विभावं हृदये वहन्ती ।
दष्टाधरा पाणिपुटैरजस्रं, पिण्डीकृतं पाटयति स्म हारम् ॥ ३९

काचिद् भुजाभ्यां बहिरङ्गभावाच्छून्यं यदाऽऽलिङ्गनमाततान ।
अन्तर्गते मन्त्रिवरेऽन्तरङ्ग-भावादशून्यं हृदये तदाऽऽसीत् ॥ ४०

इत्थं गौरवगौरपौररमणीस्फारकटाक्षच्छटा-गुच्छच्छायमयूरपिच्छघटितच्छत्रच्छविच्छादितः ।
मन्दं मन्दममन्दवन्दिवचनैरानन्द्यमानो ययौ, धन्यः सौधमसौ धरातलसुधाधाराधरो धीरधीः ॥ ४१

मूर्तोर्जितपतेरथाऽऽत्मपदेऽध्यारोप्य लोकं पुनः,
सम्मानोचितचातुरीपरिचितं सर्वं विसृज्य क्षणात् ।
साक्षादक्षतपात्रपूरितकरश्रेयःप्रसिद्धाङ्गना
रङ्गन्मङ्गलवर्धितः स गमयामास स्मितो वासरम् ॥ ४२

किञ्च—

तात ! ख्यातगिरः सुता मम हता ही ! कालिदासादयो,
नन्वेकस्तु चिरायुरस्तु जगति श्रीवस्तुपालोऽधुना ॥
मार्कण्डः स्फुटमाशिषा शमवतामल्पायुरप्येष यत्,
कल्पायुर्जयतीति वाग्गिमदने धाताऽस्तु जानादरः ॥ १

श्रीवस्तुपाल ! भवदीययशोऽङ्गजस्य, शशन्नभोऽङ्गणविहारमनोहरस्य !
सारङ्गसङ्गतकरस्तरवारिधारि-रक्षाभटश्रियमुरीकुरुते सितांशुः ॥ २

सिन्धुराजविजयोज्ज्वलं यशो, वस्तुपाल ! तव चन्द्रवद् दिवि ।
यत्र दुःखपटलीमलीमसं, सिन्धुराजमुखमेव लाञ्छनम् ॥ ३

यत् कवेर्लवणसिंहजन्मन, काव्यमेतदमृतोददीर्धिका ।
वस्तुपालनवकीर्तिकन्यया, धन्यया किमपि यत्र खेलितम् ॥ ४

प्रतिसर्गं प्रबन्धेऽस्मिन्-नरसिंहविनिर्मिते । इमान्यकृत चत्वारि, काव्यान्यमरपण्डितः ॥ ५

॥ इति सुकृतसङ्कीर्तननाम्नि महाकाव्ये पुरप्रवेशो नाम दशमः सर्गः ॥ १० ॥



आसाद्य वीरधवलाधिपतिप्रदत्त-श्रीस्तम्भतीर्थनगरप्रभुतामथासौ ।
कीर्तीः क्षितौ तनुमतीरिव कीर्तनानि, कर्तुं समारभत मन्त्रिशिरोऽवतंसः ॥ १

पञ्चासराह्मणहिल्लपुरीपुरन्ध्री-सीमन्तरत्नमिव पार्श्वजिनेशवेश्म ।
उद्धृत्य येन यशसा जनितो जरत्या, हस्तावलम्बनविधिर्वनराजकीर्तेः ॥ २

श्रीस्तम्भतीर्थनगरे रचयाञ्चकार, भीमेशवेश्मनि च काञ्चनकेतुकुम्भौ ।
मूर्तेव कीर्तिरनिशं परवैजयन्ती, नर्नर्ति यत्र दिवि देवनदीं जयन्ती ॥ ३

उत्तानपद्दमज(त)निष्ट पुरस्य भट्टा दित्यस्य मूर्धनि च काञ्चनशेखरं सः ।
तत्रैव दूरतरतापयशःप्रताप-भास्करद्वितयसम्भवतां बभूते ॥ ४

भट्टार्कपूजनवने वटकाभिधाने, कूपं व्यधापयदसौ क्षितिनाभिरूपम् ।
दूर्वाङ्कुरप्रकरकर्बुरिताङ्गकुल्या-मार्गापदेशमिलितासितरोमराजिः ॥ ५

अग्रेऽपि तत्र बकुलाभिधचण्डभानो-रुच्चैः सुधामधुरमण्डपकैतवेन ।
स्पष्टीकृतोऽयममुना प्रभवत्प्रभावो, भूमौ चमत्कृतिकृते स्वयशःशशाङ्कः ॥ ६

श्रीमानखण्डपदमण्डपमत्र मन्त्री, श्रीवैद्यनाथशिवसद्म यदेष चक्रे ।
रोगव्ययाय कृतिनां दधदोषधीशं, तत्रावतारमकृत स्वयमेव देवः ॥ ७

ऊर्ध्व पद निजयशोभरसोदरस्य, तत्रस्य तेन विदधे यदशोचभाया ।
तत्र स्थित तदनुवासरमाभमासा, विश्वेयवस्तुषु हसत्युपरिप्रतिष्ठम् ॥ ८

अत्रैव साधुहतयऽद्भुतपुण्यलक्ष्मी-नगोपम वसतियुग्ममसौ चकार ।
यत्र प्रतिक्षणमहोत्सवहेतुभूता, भूमिश्रमं महति व दनमालिकैव ॥ ९

आरोहदैभवभृत तदगर्भमिवासौ, कुम्भस्तनीमुभयपक्षगवाक्षनेत्राम् ।
तेन प्रपामपि रसप्रसरप्रदरया, वीक्ष्यैव यामयति मद् तु न निर्वृतिं क [1] ॥ १०

तेन व्यधायि धवलक्कपत्तनश्रीवीथीपुरोवायमिवाऽऽदिजिनेन्द्रचैत्यम् ।
मुक्तवाऽपि चञ्चभक्तजनाननपङ्कजानि, यत् पीयते जनविलोचनचञ्चरीकैः ॥ ११

अत्रापि तेन वसतिद्वितय मुनीना, हेतोरकारि सुकृतामृतपानपात्रम् ।
यस्माद् द्विधा प्रसृमर शुचिकीर्तिपूरो, विश्वत्रिय श्रयति विस्तृतहारशोभाम् ॥ १२

या कीर्तिरस्य समभूदिह रागकारव भट्टारकालयमनुद्धरणेन रिथे ।
तस्या भुजङ्गमजगद्गमनाय मार्गे, वापीमिपादयमिहैव कृती वितेने ॥ १३

सा काऽपि कोमलयशोऽङ्कुरवर्धनाय, धात्रीव तेन रचितेयमिह प्रपाऽपि ।
या पूरयेत तृषितेषु तदा चजातमध्येषु केषु न पय कलशस्तनोऽयम् [2] ॥ १४

शत्रुञ्जयाद्रिमुकुटस्य पुरो जिनस्य, तेनेन्द्रमण्डपमिद तदकारि किञ्चित् ।
अप्येकदारमधिगम्य जना यदन्त र्भवान्तरेऽपि न भजन्ति कदाऽपि तापम् ॥ १५

अत्र व्यधापयदय नवमुज्जयन्त श्रीस्तम्भनाधिपजिनाधिपचैत्ययुग्मम् ।
तत्केतुकैतवकराञ्चितयेन कीर्ति, रस्येन्द्रमण्डपगिराभुवि नृत्यतीव ॥ १६

लक्ष्मीर्यथाऽप्यलगिता जगदेकभर्तु भक्त्या ततोऽनलमयेयमिमा च देवीम् ।
वाग्मूर्तिमत्र रचयन्निति स स्वमेकमाकृपमीणमपि वाग्मिनमप्यशासत् ॥ १७

मूर्तीर्विधाप्य निजपूर्वजपूरुषाणा, तेनात्र नियतरुचिपाननिभैस्तदास्थे ।
गा प्रागिता रजनिमालनशीलपद्मबन्धु स्या किमेनमपि मुञ्चति साऽपि लक्ष्मी [3] ॥ १८

मूर्तित्रय हरिकरिस्थमपूरि तेज. पालस्य वीरधवलस्य तथाऽऽत्मनोऽसौ ।
सन्नद्धसुदुरकलिप्रलयाय मूर्त-मत्र्य युगत्रयमिवात्र पावनदेशे ॥ १९

चत्वार्यथ चतुरधीसनलोकना ऽत्वा प्रद्युम्नशाम्बागिरिशाण्यवतार्य तत्र ।
तज्जकीर्तिनिवहस्य चतुर्मुखत्वाद्, धातु श्रिय निदधतोऽपि बभूव धाता ॥ २०

आलोक्य वीक्षितपुराननमूपमक्त्वा चैत्यश्रिया जिनपतेस्तमतीनसत्कम् ।
अत्यद्भुतमलकृततया गिरमीव वक्त्रो, पाणौ तदीयकृततोरणकैतवेन ॥ २१

श्रीसुव्रत भृगुपुरादयमत्र मन्त्री वीर च सत्यपुरत पुरतोऽवतार्य ।
ताभ्या सदा विहितदीपमनोहराभ्या, लोकद्वयीमपि मुदा विशदाञ्चकार ॥ २२

भामण्डलप्रतिनिधिर्विदधे जिनेन्दो-र्यस्तेन तत्र मणि-काञ्चनपृष्ठपट्टः ।
तत्कान्तिभिर्निदलितेषु तमस्सु चैत्ये, दीपा जयन्ति यदि पूजनमङ्गलाय ॥　२३

यच्छातकुम्भमयतोरणकुम्भजालं, तत्राधरीकृतरविच्छवि तेन तेने ।
तेनायमद्रिपतिरुन्नतरप्रभाव:, सम्भाव्यतेऽद्यहसहर्य्यहरोमधीरा: ॥　२४

यद्यम्बरे सुरगुरोरिव मे व्यापास्पदं, वेधाः स्थितिं तदहमत्र मुहुर्निरीक्ष्य ।
अभ्रंलिहाद्रिपतिमूर्धनि कीर्तनौघ-मेतेन कारितमसङ्ख्यमवर्णयिष्यम् ॥　२५

श्रीपादलिप्तपुरसीम्नि सरः स चक्रे, यस्यालिरकमधुरे इवाव तीरे ।
नित्यं नितान्तमधुरीभवितुं सुधाभुग्-भोग्यः सुधारुचिरपि प्रतिमामिषेण ॥　२६

एष स्फुरद्गुरुमुनिप्रसरामिहैव, स्वर्दण्डदर्शनपरां वसतिं वितेने ।
यस्यां यश सितरुचिर्विशदः स कोऽपि, जज्ञेऽस्य यत्र विधुरेव बभूव चिह्नम् ॥　२७

तत्र प्रपेयमपि तेन नवा वितेने, यां प्राप्य शीत-मधुरोज्ज्वलहारिवारिम् ।
पीयूषकुण्डहिमधामजमेव गर्व-सर्वस्वमन्यजगतोर्जगती बभञ्ज ॥　२८

माधुर्यधुर्यमतुलामृतकुण्डवृन्द-स्यन्दानुविद्धमिव यत्र जलं रराज ।
ग्रामेऽर्कपालितकनामनि तेन तेने, पातालमूलगतखातगुरुस्तडागः ।　२९

श्रीस्तम्भनाख्यपुरतीर्थपतिं निशम्य, श्रुत्वा च पार्श्वरुचिरं न स उज्जयन्ते ।
द्वेधोर्धितैर्दिवि यशोभिरदादपूर्वं वैराज्यदुःखममृतांशु-नभःश्रवन्त्योः ॥　३०

स स्तम्भनाभिधपुरेऽद्भुतमुद्दधार, श्रीपार्श्ववेश्म किमपि स्मितवैभवं तत् ।
यत्रागतौ नवकृतप्रतिमाच्छलेन, कौतूहलाद् विमल-रैवतकादिदेवौ ॥　३१

तेन प्रपाद्वयमिहाघटि पार्श्वपार्श्वे स्थित्यैव तादृशगुणप्रगुणं किलैतत् ।
छायामनोज्ञममृताभजलं बिभेद, तापं यदि स्वमवहि स्वमपि प्रपाया ॥　३२

श्रीवैद्यनाथसदनात् किल मालवेशो, दर्भावतीभुवि जहार सुवर्णकुम्भान् ।
श्रीकेलिवेश्म सचिवस्तु स वस्तुपाल-स्तस्मिन् दधौ दिनपतिप्रतिमान्विपत्तान् ॥　३३

चक्रेऽर्बुदाख्यगिरिमूर्ध्नि निजाग्रजन्म-श्रीमल्लदेवसुकृताय स मल्लिदेवम् ।
तद्देहदीधितिभिरञ्जनमञ्जुलाभि-र्लक्ष्मायितं भृशममुष्य यश:शशाङ्के ॥　३४

शक्तः क वक्तुमहमल्पमतिर्बहूनि, श्रीवस्तुपालसचिवेश्वरकीर्तनानि ।
यत्सङ्ख्यया दिवि विधिर्व्यधितोडुनिन्दून्, शीतांशुना खटिकयैव फलानि दातुम् ॥ ३५

ईदृग्मन्त्रिकिरीटकीर्तनघटाशङ्कटचमानैर्मुहु-,
　　　कीर्त्तीनां निवहैरहम्प्रथमिकावष्टम्भसरम्भिभिः ।
तन्मानाधिकवर्धनव्यसनिभिर्मन्ये विभिन्नं नभ,
　　　स्वर्दण्डच्छलदृश्यमाणनिराद्यस्फोटरेखास्पदम् ॥　३६

किंच—

विश्राम्यन्तु भुजङ्गराजरजनीजानिशरार्जाविनी-
जीवातु-स्तनयित्नवो ! नयनयश्री या भवन्त्वाधिरम् ।
उत्तम्भं भुजया यशोभिरमलं दीर्घं प्रतापैर्द्विप-
द्वार्थैः सिक्तमिदं तनोतु भुवनं श्रीवस्तुपालः सदा ॥ १

विश्वं न स्यादनीदृग् निखिलमपि कदाऽप्येष लोकप्रवादः,
कल्पे कल्पे ततस्त्वं नदयसि विदुषो लब्धपुण्यावतारः ।
कल्पद्रुः कामधेनुस्त्रिदशमणिरपि श्रीवसन्त ! श्रवन्ती-
भूयाम्भोधिं गतानामिति भवति भवद्दानवारां विवर्त्तः ॥ २

स्फूर्जत्फेनावलिवलयितोत्तालकल्लोलमाला-
लीलालोलजलधिवलयव्याजतो वस्तुपाल ! ।
क्रीडन्त्येता रणभुवि भवत्कीर्तयः स्तम्भतीर्थ-
प्रान्ते प्रीतिस्तवकितरसाः शङ्खदुष्कीर्त्तयश्च ॥ ३

विश्वेऽस्मिन्नरिसिंहकोविदकृतप्रौढप्रबन्धाद्भुत-
श्रीमन्त्रीश्वरवस्तुपालयशसी पीयूषपूरोपमे ।
एते हर्षवशादशेषविबुधैरास्वादनीये मिथः-
सङ्क्रान्त्या क्षणलब्धसिद्धिविभवे यावज्जगन्नन्दताम् ॥ ४

प्रतिसर्गं प्रबन्धेऽस्मिन्नरिसिंहविनिर्मिते । इमान्यकृत चत्वारि, काव्यान्यमरपण्डितः ॥ ५

॥ इति सुकृतसंकीर्त्तननाम्नि महाकाव्ये सकलकीर्त्तन-
कीर्त्तनो नामैकादशः सर्गः ॥ ११ ॥



गूर्जरेश्वरपुरोहितश्रीसोमेश्वरदेवकविविरचित–

# कीर्त्तिकौमुदीमहाकाव्यस्थश्लोकानामकारादिक्रमेणानुक्रमः ।

## सुकृतसंकीर्त्तनमहाकाव्यस्थश्लोकानामकारादिक्रमेणानुक्रमः ।